# "सन्ध्योपासनविधि"

## "महिम्नस्तोत्र"

हिन्दी और उर्दू
(लिपि में)

प्रकाशक—प्रेमनाथ शास्त्री (बिजबिहारा काश्मीर)

मूल्य ००-५०

# नित्यकर्मविधिः।

## ॥ अथ स्नानविधिः ॥

श्रीगणेशाय नमः। ओंआयुर्बलं यशो वर्चः प्रजाधृतिवसूनि च। ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते॥ यो[2] विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्। संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः॥ नमोऽस्त्व[3]नन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः॥ नमः[4] कमलनाभाय नमस्ते जलशायिने। नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते॥ गङ्गा[5]प्रयागगयनैमिषपुष्करादितीर्थानि यानि भुवि सन्ति हरिप्रसादात्। आयान्तु तानि करपद्मपुटे मदीये प्रक्षालयन्तु वदनस्य निशाकलङ्कम्॥ तीर्थे स्नेयं

---

१ दातन करना। २ हाथ धोना। ३ बाहे पैर धोना। ४ दाहे पैर धोना। ५ मुंह धोना।

तीर्थमेव समानानां भवति । मा नः शंस्यो अररुषो धूर्तिः प्राणङ्मर्त्यस्य । रक्षाऽऽनो ब्रह्मणस्पते ।। ओंगायत्र्यै नमः ओं भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।। ३ ।। गायत्र्यैव शिखामाबध्य ।। [1]यज्ञोपवीतं परमं पवित्रं, प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं, यज्ञोपवीतं बलमस्तु तेजः ।। यज्ञोपवीतमसि, यज्ञस्य त्वा, उपवीतेन उपनह्यामि ।। [3]कृत्वाऽलं पादशौचं [4]विमलमऽथ जलं [5]त्रिःपिबेदुन्मृजेद्द्विः[6]स्तर्जन्यऽङ्गुष्ठकाभ्यां [7]संजलमऽभिमृशेन्नासिकारन्ध्रयुग्मम् । [8]अङ्गुष्ठानामिकाभ्यां नयनयुगलकं [9]कर्णयुग्मं कनिष्ठाङ्गुष्ठाभ्यां [10]नाभिदेशं

---

१ यज्ञसूत्र और शिखा ो दोना । २ यज्ञसूत्र गले में पाना । ३ अच्छीतरह पैर धोकर । ४ फिर सफा पानी । ५ तीन बार पीकर और दो बार बाहे तरफ सूंगलिकर छोडना । ६ बाहे हाथके बीच में रखे हुई पानी तर्जनी और अंगूठ से । ७ दानो नथनों को मलना चाहिये । ८ अंगूठ और अनामिका से दो आंखों को मलना । ९ कनिष्ठा और अंगूठ से दो कानों को । १० फिर नाभिस्थान और हृदय को हथेली से ।

हृदयमऽथ तलेनाऽङ्गुलीभिः शिरोंसौ॥ प्राणायामः॥ ओंभूः ओंभुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंसत्यं ओं-तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचो-दयात् ओं आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोम् ॥ ब्रह्मणोऽभ्यादयः नमो अग्नये अप्सुषदे नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽपांपतये नमोऽद्भ्यः ॥ अवभृथे त्रिष्टुब्वरुणः । उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाउ । अपदे पादा प्रतिधातवे करुताप-वक्ता हृदयाविधश्चित् ॥ यमस्य राज्ञो जगती वरुणः

---

१ सब अङ्गुलियों से सिर और कन्दों को मलना । २ इह मन्त्र एकबार पढते २ नाभिस्थान पर रक्तवर्ण ब्रह्मा के ध्यान समेत "पूरक" याने अंगूठ से दाहे नथन बान्ध के बाहे नथन से आहस्ता २ प्राण चडावना ॥ और दो वार पढते २ हृदय पर कृष्णवर्ण विष्णु के ध्यान समेत "कुम्भक" याने अंगूठ से भाकय अङ्गुलियों से बाहे नथन भी बान्ध के प्राण बन्ध रखना ॥ और तीन बार पढते २ माथे पर श्वेतवर्ण शिव के ध्यान समेत "रेचक" याने अंगूठ उठाकर दाहे नथन से शनैः २ प्राण छोडना ॥ इह प्राणायाम की विधि है । ३ नमस्कार । ४ उपस्थान । ५ हाथों से पानी में तीनवार मण्डल करना ।

ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो देवः सविता बृहस्पतिर्विश्वेदेवा मरुतो मुञ्चन्तु स्वर्काः ॥ निचार्ङ्कुणस्य शुनःशेफस्य चापः। सुमित्रिया न आपः ओषधयो भवन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ येत्किंचेदं वरुण दैव्येजनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ते यत्तव धर्माय योऽपि म मा नस्तस्मादेनसो देव रीरिषः ॥ ओंभूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियोयोनः प्रचोदयात्। २। त्रितर्स्ये महापाङ्क्तिरादित्याः। आदित्या अव हिख्याता दिक्कूलाद्दिवस्पृशः सुतीर्थाः सर्वतो यथा। नुनोनेषया सुगमऽनेहसो वऊतयः सुऊतयो वऊतयः ॥ मेधातिथेर्गायत्रं विष्णुः। अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्तधामभिः ॥ भर्गस्य बृहती

---

१ बाहे तरफ तीन जलाञ्जलि छोडना। २ नमस्कार। ३ मिट्टीको तीन भाग करके पहलेभाग पर पानी अंगूठ से छोडना। ४ दूसरे भागपर। ५ तीसरे भागपर। ६ तीसरे भाग को और चार भाग करके, प्रथमभाग पूर्व से नदी में छोडना।

इन्द्रः । यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥ शासस्याऽनुष्टुभो[1] विमृध इन्द्रः । स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः सोमपा अभयङ्करः ॥ विरक्षो[2] विमृधो जहि विवृत्रस्य हनूरुज । विमन्युमिन्द्र वृत्रहन्नऽमित्रस्याभिदासतः ॥ वसुक्रस्य[3] त्रिष्टुबिन्द्रः । इदं सुमे जरितरः चिकिद्धि प्रतीपं शापं नद्यो वहन्ति लोपाशाः सिहं प्रत्यञ्चमत्स्याः क्रोष्टा वराहान्निरतत्थ कक्ष्यात् ॥ यँज्ञस्याऽनुष्टुप्[4] मृत्तिका । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । उद्धृतासि वराहेण कृष्णेन शतबाहुना । मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च । मृत्तिके ब्रह्मदत्तासि कश्यपेनाभिमंत्रिता । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । वाचा कृतं कर्म कृतं मनसा यत्तु चिन्तितम् । मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् । त्वया

---

१ दखन से । २ पश्चिम से । ३ उत्तर से । ४ दूसरी मिट्टी पानीमें मल नाभिस्थान के ऊपर मलना ।

हतेन पापेन ब्रह्मलोकं व्रजाम्यऽहम् ॥ कुत्सस्य रुद्रो जगती । मा नस्तोके तनये मा न आयौ मा नो गोषु । मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीहविष्मन्तो नमसा विधेम ते ॥ ओंभूः ओंभुवः ओंस्वः [३]ओंमहः ओंजनः [४]ओंतपः । [५]ओंसत्यं ॥ प्राणायामः ॥ [६]तीर्थस्यावाहनं कुर्यात्तत्प्रवक्ष्याम्यऽनन्तरम् । कुरुक्षेत्रं गया गंगा प्रभासं पुष्कराणि च ॥ तीर्थान्येतानि सर्वाणि स्नानकाले भवन्तु मे । प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम् । याचितं देहि मे तीर्थं सर्वपापापनुत्तये । रुद्रान्प्रपद्ये वरदान्सर्वानऽप्सुषदस्त्वहम् । सर्वानऽप्सुषदश्चैव प्रपद्ये प्रणतः स्थितः । देवमऽप्सुषदं वह्निं प्रपद्येऽघनिषूदनम् । आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा । रुद्राश्चाग्निश्च सर्पाश्च वरुणस्त्वाप एवच । शमयन्त्वाशु मे पापं पुनन्त्वेते सदा मम ।

---

१ प्रथमांश को चार भाग करके । पहलाभाग माथे को मलना । २ द्वितीय भागसे । इति बाहे कन्दे पर मलना । ४ इति दाहे कन्देपर । ५ इति सिर को मल कर, प्राणायाम करना । ६ तीर्थों का प्रणाम ।

इत्येवमुक्त्वा कर्तव्यं ततः संमार्जनं जले ॥ अपां पतये विद्महे, पाशपाणये धीमहि, तन्नो वरुणः प्रचोदयात् । ३ । ॐ तत्सद्ब्रह्माऽद्यतावत्तिथावद्याऽमुकमासस्यामुकपक्षस्य तिथावऽमुकायामाऽत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीविष्णुप्रीत्यर्थमऽमुकनद्याः प्रवाहे स्नानमऽहं करिष्ये ओंकुरुष्व ॥ ओंतद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदत् ॥ ओं[३]भूः ओंभुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंसत्यम् ॥ ओंहंसः शुचिषद्वसुरऽन्तरिक्षसद्धोता वेदिषदऽतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योम सदऽब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ओंनमो देवेभ्यः । कण्ठोपवीती । स्वाहा ऋषिभ्यः । अपसव्येन । स्वधा पितृभ्यः । सव्येन । आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं

---

१ तीसरा भाग पानी की अञ्जली में रखके संकल्प पढके नदी में छोडना । २ सिर को अञ्जली से पानी फीकना ॥ ३ सिर को छिटकना । ४ उपस्थान ।

सचराचरं जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु ॥ यत्त्व-गऽस्थिगतं पापं जन्मान्तरकृतं च यत् । तन्मे हरतु कल्याणि मूर्ध्नि स्पर्शेन वैष्णवि ॥ युवा सुवासाः परि-वीत आगात्स उश्रेयान्भवति जायमानः । तन्धीरासः कवय उन्नयन्ति साध्यो मनसा देवयन्तः ॥ अस्मत्कुले तु ये जाता अपुत्रा गोत्रवर्जिताः । ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ इति स्नान-विधिः ॥

## ॥ अथ सन्ध्योपासना ॥

श्रीमहागायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः ॥ ओंप्रणवस्य ऋषिर्ब्रह्मा, गायत्रं छन्द एव च । देवोऽग्निर्व्याहृतिषु च, विनियोगः प्रकीर्तितः ॥ प्रजा-पतेर्व्याहृतयः, पूर्वस्य परमेष्ठिनः । व्यस्ताश्चैव सम-स्ताश्च, ब्राह्ममऽक्षरमोमिति ॥ व्याहृतीनां समस्तानां, दैवतं तु प्रजापतिः । व्यस्तानामऽयमऽग्निश्च, वायुः

---

१ चौथमा भाग से माथे पर तिलक करना । २ वस्त्र पहनना । ३ लंगूठी निचौडना । ४ नमस्कार करना ।

सूर्यश्च देवताः ॥ छन्दश्च व्याहृतीनामेकाऽक्षराणामु-क्ताख्यं, द्व्यक्षराणामऽत्युक्ताख्यम् । विश्वामित्र ऋषिश्छन्दो, गायत्रं सविता तथा ॥ देवतोपनये जप्ये, गायत्र्या योग उच्यते । आवाहयामि गायत्रीं, सर्व-पापप्रणाशिनीम् ॥ न गायत्र्याः परं जप्यं, न व्याहृतिसमं हुतम् । आगच्छ वरदे देवि, जपे मे सन्निधौ भव ॥ गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता । अग्निर्वायुश्च सूर्यश्च बृहस्पत्याप एव च ॥ इन्द्रश्च वि-श्वेदेवाश्च देवताः समुदाहृताः । एवमाऽऽर्षं छन्दो दैवत, विनियोगं चाऽनुस्मृत्य ॥ गायत्र्या शिखामा-ऽबद्ध्य, गायत्र्यैव समन्ततः । आत्मनश्चापः परि-क्षिप्य, प्राणायामं कुर्यात् ॥ ओजोऽसीति गायत्रीमा-ऽऽवाह्य देवानामाऽर्षम् ॥ ओजोऽसि सहोऽसि बलम-ऽसि भ्राजोऽसि देवानांधाम नामासि । विश्वमऽसि विश्वायुः सर्वमऽसि सर्वायुरऽभिभूः ॥ ओंभूः ओंभुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंसत्यं ओंतत्सवि-

---

१ अपने आपको छडक के अञ्जलि करना। २ प्राणायाम करने का मंत्र।

तुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोद-
यात् ओंआपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥
ओं[1]अग्निश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः
पापेभ्यो रक्षन्ताम् । यद्ऽह्ना पापमऽकार्षं, मनसा
वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना । अहस्तदऽवलु
म्पतु, यत्किंचिद्दुरितं मयीदमऽहमाऽपोऽमृतयोनौ सत्ये
ज्योतिषि जुहोमि स्वाहा ॥ ॥ ओं[2]सूर्यश्च मा मन्युश्च,
मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या
पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण
शिश्ना । रात्रिस्तदऽवलुम्पतु, यत्किंचिद्दुरितं मयीद-
मऽहमाऽऽपोऽमृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥
॥ ओंआ[3]पः पुनन्तु पृथिवीं, पृथिवी पूता पुनातु
माम् । पुनातु ब्रह्मणस्पतिर्ब्रह्म पूतं पुनातु माम् ।
यदुच्छिष्टमऽभोज्यं वा, यद्वा दुश्चरितं मम । सर्वं
पुनन्तु मामाऽऽपोऽसतां च प्रतिग्रहं जुहोमि स्वाहा ॥

---

१ सायं की तीन आचमन । २ प्रातः की तीन । ३ मध्याह्न की तीन आचमन करना ।

ओंआपो हिष्ठा मयोभुवस्तां न ऊर्जे दधात न । महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ हिरण्यवर्णाः शुचयः पावका, यासु जाताः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ १ ॥ ओंयासां देवा दिवि कृण्वंति भक्ष्यं, या अन्तरिक्षे बहुधा भवन्ति । या० ॥ २ ॥ ओंयासां राजा वरुणो याति मध्ये, सत्याऽनृते अवपश्यञ्जनानाम् । या० ॥ ३ ॥ ओंशिवेन मा चक्षुषा पश्यताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे । मधुश्च्युतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु ॥ ४ ॥ ओंशन्नो देवीरऽभीष्टय आपो भवन्तु पीतये, शंय्योरऽभिस्रवन्तु नः ॥५॥ ओंशन्न आपो धन्वन्याः, शन्नः सन्त्वऽनूप्याः । शन्नः समुद्रिया आपः शमुनः

---

१ छोतेको छिडकना । २ पैरों को । ३ सिरको । ४ छाते को । ५ पैरों को । ६ सिर को । ७ सिर को । ८ छाते को । ९ पैरों को । १० छाते और सिरको फी मंत्र से ।

सन्तु कूप्याः ॥ ६ ॥ आपो अस्मान्मातरः शुन्धयन्तु घृतेन मा घृतपाः पुनन्तु । विश्वं हि रिप्रं प्रवहन्तु देवीरुदिदाभ्यः शुचिरापूत एमि ॥ ७ ॥ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभिदद्रोह यद्वा शेप उतानृतम् ॥ ८ ॥ मुञ्चन्तु मा शपथ्यादऽथो वारुण्यादुत । यथो यमस्य पड्वीशात्सर्वस्माद्देव किल्विषात् ॥ ९ ॥ यज्जाग्रद्यत्सुप्तः पापमभिजगाम । सर्वस्मान्मा तस्मादेनसः प्रमुञ्चतु ॥ १० ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत् ॥ ११ ॥ [1]ओंद्रुपदादिवेन्मुमुचानः, स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाऽऽज्यमाऽऽपः शुन्धन्तु मैनसः ॥ [2]ओंऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरऽजायत, ततः समुद्रो अर्णवः ॥ समुद्रादऽर्णवादऽधि, संवत्सरो अजायत । अहोरात्राणि व्यदधद्विश्वस्य मि-

---

१ बाहे तरफ तीन जलाञ्जलि सूँग के छोड़ना । २ पानी में हाथों से तीन आवर्तन करना ।

षतो वशी ॥ सूर्याचन्द्रमसौ धाता, यथापूर्वमऽकल्पयत् । दिवं च पृथिवीं, चाऽन्तरिक्षमऽथो स्वः ॥ ओंभूः ओं-भुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंसत्यम् ॥ ओं-अन्तश्चरसि भूतेषु, गुहायां विश्वतो मुखः । त्वं यज्ञस्त्वं वषट्कार, आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ प्राणायामः ॥ ओंभूर्भुवःस्वस्तत्सवितु० ३ ॥ ओं-उद्वयन्तमसस्परि, ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमऽगन्म ज्योतिरुत्तमम् ॥ ओंउदुत्यं जातवेदसं, देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ ओंचित्र-न्देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याऽग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षं, सूर्य आत्मा जगतस्तस्थु-षश्च ॥ ओंतच्चक्षुर्देवहितं, पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं, जीवेम शरदः शतम् ॥ ओंहंसः शुचिष-द्वसुरऽन्तरिक्षसद्धोता वेदिषदऽतिथिर्दुरोणसत् । नृषद्व-रसदृतसद्व्योमसदऽब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

---

१ सिर को छिडकना । २ तीन आचमन । ३ सूर्यके संमुख तीन जलाञ्जलि छोडना । ४ उपस्थान ।

ओंविभ्राड्बृहत्पिबतु, सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतम् । वातजूतोयो, अभिरक्षत्यात्मना, प्रजा पिपर्ति बहुधा विराजति ॥ ओंआनुष्टुभस्य सूक्तस्य, त्रिष्टुबन्तस्य देवता । विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ "ओंपुरुषमेधाः पुरुषस्य नारायणस्याऽऽर्षम् ॥"
ओंसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽऽत्यतिष्ठद्दशांगुलम् ॥ पुरुष एवेदं सर्वं, यद्भूतं यच्च भव्यम् । उताऽमृतत्वस्येशानो, यदऽन्नेनाऽतिरोहति ॥ एतावानऽस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादऽस्याऽमृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः, पादोऽस्येहाऽभवत्पुनः । ततो विश्वं व्यक्रामत्साशनाऽनशने अभि ॥ तस्माद्विराडऽजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमऽथो पुरः ॥ यत्पुरुषेण हविषा देवा यज्ञमऽतन्वत । वसन्तो अस्याऽऽसीदाऽऽज्यं, ग्रीष्म इध्मः शरद्धविः ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातम-

---

१ विष्णु का ध्यान करना ।

ऽग्रतः । तेन देवा अयजन्त, साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः, संभृतं पृषदाऽऽज्यम् । पशूंस्तांश्चक्रे वायव्यानाऽऽरण्यान्ग्राम्यांश्च ये ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजु-स्तस्मादऽजायत ॥ तस्मादऽश्वा अजायन्त, ये के चोभ-यादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ यत्पुरुषं व्यदधुः, कतिधा व्यकल्पयन् । मुखं किम-ऽस्य कौ बाहू, का ऊरू पादा उच्येते ॥ ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः । ऊरू तदऽस्य यद्वै-श्यः, पद्भ्यां शूद्रो अजायत ॥ चन्द्रमा मनसो जात-श्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायु-रऽजायत ॥ नाभ्या आसीदऽन्तरिक्षं, शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानऽक-ल्पयन् ॥ सप्ताऽस्याऽऽसन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना, अबध्नन्पुरुषं पशुम् ॥ यज्ञेन यज्ञमऽयजन्त देवा, स्तानि धर्माणि प्रथमान्याऽऽसन् । ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति

देवाः ॥ ब्रह्मणस्त्रिष्टुप् मनः ॥ ओं यज्जाग्रतो दूर-मुदैति दैवं, तदु सुप्तस्य तथैवैति । दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिवसंकल्पमस्तु ॥ येन कर्मा-ण्यऽपसो मनीषिणो, यज्ञे कृण्वन्ति विदथेषु धीराः । यदऽपूर्वं यक्षमऽन्तः प्रजानां, तन्मे० ॥ यत्प्रज्ञानमुत चेतो धृतिश्च, यज्ज्योतिरऽन्तरऽमृतं प्रजासु । यस्मान्न ऋते किञ्चन कर्म क्रियते, तन्मे० ॥ येनेदं भूतं भुवनं भविष्यत्परिगृहीतमऽमृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता, तन्मे० ॥ यस्मिन्नृचः सामयजूंषि यस्मिन्प्रति-ष्ठिता रथनाभाविवाऽराः । यस्मिंश्चित्तं सर्वमोतं प्रजानां, तन्मे० ॥ सुषारथिरऽश्वानिव यन्मनुष्यान्नेनीयतेऽभी-शुभिर्वाजिन इव । हृत्प्रतिष्ठं यदऽजरं यविष्ठं, तन्मे० ॥ अथ[१] य एष एतस्मिन्मण्डले, पुरुषो यश्चैष हिरण्मयः पुरुषः । अथ य एष एतस्मिन्मण्डले, पुरुषोऽयमेव सोयं दक्षिणेऽक्षन्पुरुषः ॥ शुक्रियं रुद्रस्य । य उदगात्पुरस्तान्म-हतो अर्णवाद्विभ्राजमानः सरिरस्य मध्ये । स मामृषभो

---

१ संहारमुद्रा करके शिवका ध्यान । २ उपस्थान करना ।

रोहिताक्षः, सूर्यो विपश्चिन्मनसा पुनातु । यद्ब्रह्माऽत्रा-
दिष्म तन्मा मा हिंसीत्सूर्याय विभ्राजाय वै नमो
नमः ॥ [1]अ नाभौ । उ हृदि । म शिरसि ॥ भूः पा-
दयोः । भुवः हृदि । स्वः शिरसि ॥ ओंभूः अङ्गुष्ठाभ्यां
नमः । भुवः तर्जनीभ्यां नमः । स्वः मध्यमाभ्यां
नमः । महः अनामिकाभ्यां नमः । जनः कनिष्ठि-
काभ्यां नमः । तपः सत्यं करतलकरपृष्ठाभ्यां नमः ॥
भूः पादयोः । भुवः जान्वोः । स्वः गुह्ये । महः
नाभौ । जनः हृदि । तपः कण्ठे । सत्यं शिरसि ॥
ओंभूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः
शिखायै वषट् । महः कवचाय हुँ । जनः नेत्राभ्यां
वौषट् । तपः सत्यमऽस्त्राय फट् ॥ तत्सवितुरङ्गुष्ठाभ्यां
नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गो देवस्य मध्य-
माभ्यां नमः । धीमहि अनामिकाभ्यां नमः । धियो
योनः कनिष्ठिकाभ्यां नमः ॥ प्रचोदयात् करतलकर-
पृष्ठाभ्यां नमः ॥ तत्पादयोः । सवितुर्जान्वोः । वरेण्यं
कट्यां । भर्गो नाभौ । देवस्य हृदये । धीमहि कण्ठे ।

---

१ न्यास करना ।

धियो नासिकायां । यश्चक्षुषे । नः ललाटे । प्रचोदयात् शिरसि ॥ तत्सवितुर्हृदयाय नमः । वरेण्यं शिरसे स्वाहा । भर्गो देवस्य शिखायै वषट् । धीमहि कवचाय हुँ । धियो योनः नेत्राभ्यां वौषट् । प्रचोदयाद्ऽस्त्राय फट् ॥ ओंआपःस्तनयोः । ज्योतिर्नेत्रयोः । रसो मुखे । अमृतं ललाटे । ब्रह्मभूर्भुवः स्वरों शिरसि ॥ तत्समाय नमः। स संपुटाय नमः। वि विततायं नमः। तुर्विस्तीर्णाय नमः । व द्विमुखाय नमः । रे त्रिमुखाय नमः । ण्य चतुर्मुखाय नमः । अं पंचमुखाय नमः । भ षण्मुखाय नमः । र्गो अधोमुखाय नमः । दे व्यापकाञ्जलये नमः । व शकटाय नमः । स्य यमपाशाय नमः । धी ग्रन्थिकायै नमः । म संमुखोन्मुखाय नमः । हि विलम्बाय नमः । धी मुष्टिकायै नमः । यो मीनाय नमः । यो कूर्माय नमः । नः वराहाय नमः । प्र सिंहाक्रान्ताय नमः । चो महाक्रान्ताय नमः । द मुद्गराय नमः । यात्पल्लवाय नमः ॥ प्राणायामः ॥ अस्यश्री

---

१ अथ मुद्रा । २ पानी से सङ्कल्प छोडना ।

महागायत्रीशापोद्धारमन्त्रस्य विश्वामित्र ऋषिः, विष्टार-पङ्क्तिगायत्रं छन्दः, सविता देवता, शापोद्धारे विनियोगः ॥ ओंब्रह्मणाग्निः संविदानो रक्षोहा बाधितामितः । अमीवायुस्ते गर्भं दुर्नामा योनिमाशये १० "इति ऋग्वेदे" हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १० ॥ "इति यजुर्वेदे" ओं आवायव्य यावायव्या यान्योर्वायायायवः ओंहरोसि पाप्मानं मे विद्धिः ॥ १० ॥ "इति सामवेदे" सुभद्रा पावनी सुधा गायत्रीं विश्वभेषजम् । विशापामेनां कृत्वा यथास्तं विपरीतन १० "इति अथर्ववेदे" ॥ ॥ तत्सवितुरिति मन्त्रस्य, विश्वामित्र ऋषिः, गायत्रं छंदः, सविता देवता, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं नित्यकर्मनिमित्तं चतुर्वर्गसिद्ध्यर्थे जपे विनियोगः ॥ मुंक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां, तत्त्वाऽऽत्मवर्णा-

---

१ चार वेदों की चार मंत्रों का दशांश जपना । २ सङ्कल्प छोडना । ३ ध्यान धारना ।

तिमकाम् । गायत्रीं वरदाऽभयाऽङ्कुशकरां, शूलं कपालं गुणं शङ्खं चक्रमऽथाऽरविन्दुयुगलं हस्तैर्वहन्तीं भजे ॥ आगच्छ वरदे देवि, त्र्यक्षरे ब्रह्मवादिनि । गायत्रिच्छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते ॥ ३ ॥ ओं[1]भूर्भुवः स्वस्तत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयादों ॥१०८॥ प्राणायामः ॥ [2]दशभिर्जन्मचरितं, शतेन च पुरा कृतम् । त्रियुगोत्थं सहस्रेण, गायत्री हन्ति किल्बिषम् ॥ देवा गातु श्रोत्रियाः । देवा गातुविदो, गातुं वित्वा गातुमित मनसस्पत इमं देवयज्ञं स्वाहा, वाचे स्वाहा वाते धाः ॥ [3]ओंनमः प्राच्यै दिशे याश्च देवता, एतस्यां प्रतिवसन्ति, एताभ्यश्च वो नमः ॥ १ ॥ [4]नमोऽवान्तरायै दिशे० ॥ [5]नमो दक्षिणायै दि० ॥ [6]नमोऽवान्तरायै दि० ॥ [7]नमः प्रतीच्यै दि० ॥ [8]नमोऽवान्तरायै दि० ॥ [9]नम उदीच्यै दि० ॥ [10]नमोऽवान्तरायै

---

१ मूलमन्त्र का यथा संभव जप करना। २ तर्पण करना। ३ पूर्व को प्रणाम। ४ अग्निकोण को। ५ दक्षिण को। ६ नैर्ऋत कोण को। ७ पश्चिम को। ८ वायव्य कोण को। ९ उत्तर को। १० ईशानकोण को।

दि० ॥ नम[1] ऊर्ध्वायै दि० ॥ नमोऽधरायै[2] दिशे याश्च देवताएतस्यां प्रतिवसन्ति एताभ्यश्च वो नमः ॥ ओं नमो[3] ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि ॥ इत्येतासामेव देवतानां सार्ष्टिं सायुज्यं सलोकतां सामीप्यमाप्नोति। य एवं विद्वान् स्वाध्यायमधीते ॥ ब्रह्मादयः सर्वे देवास्तृप्यन्तु। कण्ठोपवीती। सनकादयः सर्वे ऋषयस्तृप्यन्तु तृप्यन्तु ॥ अपसव्येन ॥ अग्निष्वात्तादयः सर्वे पितरतृप्यन्तु ॥ ३ ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह। ओंतत्सद्ब्रह्म अद्य तावत्तिथावित्यादि ॥ पिता अमुकोमुकगोत्रः स्वधा नमः तृप्यताम् ॥ ३ ॥ पितामहः। प्रपितामहः ॥ ३ ॥ माता–स्वधा नमः तृप्यताम ॥ ३ ॥ पितामही स्व०, प्रपितामही स्व०, मातामहः स्व०, प्रमातामहः स्व०, वृद्धप्रमातामहः स्व० मातामही स्व० प्रमातामही स्व० वृद्धप्रमातामही स्व० ॥ "इत्थमऽन्यान्सम्बन्धिनश्च तर्पयित्वा" मातृप-

---

१ ऊपर को। २ नीचे को। ३ तर्पण करना।

क्ष्यास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ॥ ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यो हिमपानं स्वधा, क्षीरपानं स्वधा, मधुपानं स्वधा, तिलोदकं स्वधा, उदकतर्पणं स्वधा । हिमं २ रजतम् ॥ २ ॥ 'सव्येन' नमो देवेभ्यः "कण्ठोपवीती" स्वाहा ऋषिभ्यः । "अपसव्येन" स्वधा पितृभ्यः "सव्येन" आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं । जगत्तृप्यतु तृप्यतु तृप्यतु ॥ एवमस्तु ॥ [1]नमो धर्मनिधानाय नमः सुकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमो नमः । [2]शान्तिः पुष्टिस्तथा तुष्टिः सन्तु मे त्वत्प्रसादतः । सर्वपापप्रशान्तिश्च तीर्थराज ! नमोऽस्तु ते ॥ इति सन्ध्योपासनाविधिः ॥

## ॥ अथ नैवेद्यमन्त्राः ॥

अमृतेश[3]मुद्रयाअमृतीकृत्य । अमृतमस्तु अमृतायतां नैवेद्यं । सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्र-

---

१ सूर्य को प्रणाम । २. तीर्थको प्रणाम । ३ दानों हाथों की अंगूठ पात्र में रखके पढना ।

# शिवमहिम्नस्तोत्रम्

ॐ महिम्नः पारं ते परमऽविदुषो यद्यऽसदृशी स्तुतिर्ब्रह्मादीना मपि तदवसन्नास्त्वयि गिरः । अथाऽवाच्यः सर्वः स्वमतिपरि- णामावधि गृणन्ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ १ ॥ अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि । स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥२॥ मधुस्फीता वाचः परमममृतं निर्मितवतस्तव ब्रह्मन् किं वागऽपि सुरगुरोर्विस्मयपदम् । मम त्वेतां वाणीं गुणकथनपुण्येन भवतः पुनामीत्यर्थेऽस्मिन्पुरमथन! बुद्धिर्व्यवसिता ॥ ३ ॥ तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु । अभव्यानामस्मिन्वरद! रमणीयामरमणीं विहन्तुं व्या- क्रोशीं विदधत इहैके जडधियः ॥ ४ ॥ किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपा- दानमिति च । अतर्क्यैश्वर्ये त्वय्यऽनवसरदुःस्थो हतधियः कुत-

कौऽयं कांश्चिन्मुखरयति मोहाय जगताम् ॥ ५ ॥ अजन्मानो लोकाः किमवयववन्तोऽपि जगतामधिष्ठातारं किं भवविधिरनादृत्य भवति । अनीशो वा कुर्याद्भुवनजनने कः परिकरो यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥ त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥ महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव वरद तन्त्रोपकरणम् । सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥ ध्रुवं कश्चित्सर्वं सकलमपरस्तु ध्रुवमिदं परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये । समस्तेऽप्येतस्मिन्पुरमथन! तैर्विस्मित इव स्तुवञ्जिह्रेमि त्वा न खलु ननु धृष्टा मुखरता ॥ ९ ॥ तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चो हरिरधः परिच्छेत्तुं यातावनलमनलस्कन्दवपुषः । ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश! यत्स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥ अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो

यद्बाहूनभृत रणकण्डूपरवशान् । शिरःपद्मश्रेणीरचितचरणाम्भो-
रुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर! विस्फूर्जितमिदम् ॥ ११ ॥
अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात्कैलासेपि त्वदधि-
वसतौ विक्रमयतः । अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥ यदृद्धिं
सुत्राम्णो वरद! परमोच्चैरपि सतीमधश्चक्रे बाणः परिजन-
विधेयत्रिभुवनः । न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयोर्न
कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥ अकाण्ड-
ब्रह्माण्डक्षयचकितदेवासुरकृपाविधेयस्यासीद्यस्त्रिनयन ! विषं
संहृतवतः । स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥ १४ ॥ असिद्धार्था
नैव क्वचिदपि सदेवासुरनरे निवर्तन्ते नित्यं जगति जयिनो
यस्य विशिखाः । स पश्यन्नीश त्वामितरसुरसाधारणमभूत्स्मरः
स्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः ॥ १५ ॥ मही पादा-
घाताद्व्रजति सहसा संशयपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्ण-
ग्रहगणम् । मुहुर्द्यौर्दौस्थ्यं यात्यऽनिभृतजटाताडिततटा जगद्र-

क्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघु दृष्टः शिरसि ते । जगद्द्वीपाकारं जलधिवलयं तेन कृतमित्यनेनैवो- न्नेयं धृतमहिम! दिव्यं तव वपुः ॥ १७ ॥ रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति । दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधिर्विधेयैः क्रीड- न्त्यो न खलु परतन्त्राः प्रभुधियः ॥ १८ ॥ हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् । गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषस्त्रयाणां रक्षायै त्रिपुर- हर जागर्ति जगताम् ॥ १९ ॥ क्रतौ सुप्ते जाग्रत्त्वमसि फल- योगे क्रतुमतां क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते । अत- स्त्वामुत्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धां बद्ध्वा दृढपरि कर: कर्मसु जनः ॥ २० ॥ क्रियादक्षो दक्षः क्रतुपतिरधीश- स्तनुभृतामृषीणामार्त्विज्यं शरणद! सदस्याः सुरगणाः । क्रतु- भ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरम- भिचाराय हि मखाः ॥ २१ ॥ प्रजानाथं नाथ प्रसभमभिकं

स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा । धनु-
ष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तं तेऽद्यापि त्यजति न
मृगव्याधरभसः ॥ २२ ॥ अपूर्वं लावण्यं विवसनतनोस्ते
विमृशतां मुनीनां दाराणां समजनि स कोपव्यतिकरः । यतो
भग्ने गुह्ये सकृदऽपि सपर्यां विदधतां ध्रुवं मोक्षोऽश्लीलं किमपि
पुरुषार्थंप्रसवि ते ॥ २३ ॥ स्वलावण्याशंसा धृतधनुष्यमऽह्नाय
तृणवत्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि । यदि स्त्रैणं देवी
यमनिरत देहार्धघटनाद्वैति त्वामद्धावत वरद मुग्धा युवतयः
॥ २४ ॥ श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिता-
भस्मालेपः स्रुगपि नृकरोटीपरिकरः । अमङ्गल्यं शीलं तव भवतु
नामैवमखिलं तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥ २५ ॥
मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः
प्रमदसलिलोत्सङ्गितदृशः । यदालोक्याह्लादं ह्रद इव निमज्ज्याऽ-
मृतमये दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान्॥ २६ ॥
त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु
धरणिरात्मा त्वमिति च । परिच्छिन्नामेवं त्वयि परिणतां बिभ्रतु

गिरं न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥ २७ ॥ त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्वर्णैस्त्रिभिरभिद-धत्तीर्णविकृति । तुरीयं ते धाम ध्वनिभिरनुरन्धानमणुभिः समस्तव्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २८ ॥ भवः शर्वो रुद्रः पशुपतिरथोग्रः सह महांस्तथा भीमेशानाविति यदभिधानाष्टकमिदम् । अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुति-रपि प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥ २९ ॥ वपुष्प्रादुर्भावादऽनुमितमिदं जन्मनि पुरा पुरारे! नैवाहं क्वचिदपि भवन्तं प्रणतवान् । नमन्मुक्तः सम्प्रत्यतनुरहमग्रेप्यऽनति मान्महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ३० ॥ नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः । नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो नमः सर्वस्मै ते तदिदमति सर्वाय च नमः ॥ ३१ ॥ बहलर-जसे विश्वोत्पत्तौ भवाय नमो नमः प्रबलतमसे तत्संहारे हराय नमो नमः । जनसुखकृते सत्वोद्रिक्तौ मृडाय नमो नमः प्रम-हसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३२ ॥ कृशपरि-

णति चेतः क्लेशवश्यं क्वेदं क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः । इति चकितममन्दीकृत्य मां भक्तिराऽधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३३ ॥ सुरभुजगनरेन्द्रैरर्चितस्येन्दुमौलेः प्रथितगुणगरिम्णो ज्ञानकारुण्यमूर्तेः । सकलगुणवरेण्यः पुष्पदन्ताऽभिधानो व्यदधदऽलघुवृत्तैः स्तोत्रमेतद्वरीयः ॥ ३४ ॥ असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्वी । लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश ! पारं न याति ॥ ३५ श्रीपुष्पदन्त मुखपङ्कजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण । कण्ठस्थितेन पठितेन समाहितेन सुप्रीणितो भवति भूतपतिर्महेशः ॥। ॥ इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः । अर्पिता तेन मे देवः प्रीयतां च सदाशिवः ॥

भैरवस्तुतिः ॥ अतिभीषणकटुभाषणयमकिंकरपटलीकृतताडनपरिपीडनमरणागमसमये । उमया सह मम चेतसि यमशासन निवसञ्छिव शंकर शिव शंकर हर मे हर दुरितम् ॥ १ ॥ अतिदुर्नयचटुलेन्द्रियरिपुसञ्चयदलिते पविकर्कशकटुजल्पितखलगर्हणचलिते । शिवया सह मम चेतसि शशिशेखर निवसञ्छिव० ॥ २ ॥ भवभञ्जन सुररञ्जन खलवञ्चन पुरहन् दनुजान्तक मदनान्तक रविजान्तक भगवन् । गिरिजावर करुणाकर परमेश्वर भयहञ्छिव श० ॥ ३ ॥ शक्रशासन कृतशासन चतुराश्रमविषये कलिविग्रह भवदुर्ग्रह रिपुदुर्बलसमये । द्विजक्षत्रियवनिताशिशुदरकम्पितहृदये शिव० ॥ ४ ॥ भवसंभवविविधामयपरिपीडितवपुषं दयितात्मजममताभरकलुषीकृतहृदयम् । कुरु मां निजचरणार्चननिरतं भव सततं शिव० ॥ ५ ॥ इति चामरार्थं जयस्तुत्यादि शिवस्तोत्रत्रयम् ॥ अथ पञ्चाक्षरषडक्षरशिवस्तुतिः ॥ नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय । देवाधिदेवाय दिगम्बराय तस्मै नकाराय नमःशिवाय ॥ १ ॥

मातङ्गचर्माम्बरभूषणाय समस्तगीर्वाणगणार्चिताय। त्रैलोक्य-नाथाय पुरान्तकाय तस्मै मकारा० ॥ २ ॥ शिवामुखाम्भोज-विकासनाय दक्षस्य यज्ञस्य विनाशकाय। चन्द्रार्कवैश्वानरलो-चनाय तस्मै शिकारा० ॥ ३ ॥ वसिष्ठकुम्भोद्भवगौतमादि-मुनीन्द्रवन्द्याय गिरीश्वराय। श्रीनीलकण्ठाय वृषध्वजाय तस्मै वकारा० ॥ ४ ॥ यज्ञस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय। नित्याय शुद्धाय निरञ्जनाय तस्मै यकाराय० ॥ ५ ॥ इति ॥ ॐकारं विन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः। कामदं मोक्षदं चैव ॐकारं तं नमाम्यहम् ॥ १ ॥ न जातो न मृतो यश्च क्षयो यस्य न विद्यते। नमन्ति देवताः सर्वे नकारं तं० ॥ २ ॥ महादेवं महावक्त्रं महाध्यानपरा-यणम्। महापापहरं देवं मकारं तं० ॥ ३ ॥ शिवात्परतरो नास्ति शिवशास्त्रेषु निश्चयः। शमन्ति सर्वपापानि शिकारं० ॥ ४ ॥ वाहनं वृषभो यस्य वासुकिः कण्ठभूषणम्। वामे शक्तिधरं देवं वकारं तं० ॥ ५ ॥ यत्र तत्र स्थितो देवः सर्वव्यापी महेश्वरः। यो गुरुः सर्वदेवानां यकारं तं० ॥ ६ ॥

अथ ब्राह्मीविद्या ॥ ॐ ॐ ॐ त्रिगुणपुरुष क्षेत्रचर मोहं भिन्धि रजस्तमसी भिन्धि, प्राकृतपाशजालं सावरणं परिहर सत्त्वं गृहाण पुरुषोत्तमोसि सोमसूर्यानलप्रवरपरमधामन् ब्रह्मविष्णुमहेश्वरस्वरूप सृष्टिस्थितिसंहारकारक-भ्रूमध्यनिलय तेजोसि धामासि अमृतात्मन् ॐ तत्सत् हंसः शुचिषत् वसुरन्तरिक्षसत् होता वेदिषत् अतिथिर्दुरोण-सत् । नृषत्वरसत् ऋतसत् व्योमसत् अब्जागोजाऋतजा अद्रिजा ऋतं परंब्रह्मस्वरूप सर्वगत सर्वशक्ते सर्वेश्वर सर्वेन्द्रियग्रन्थिभेदं कुरु कुरु परमंपदं परामर्शय परमार्गं ब्रह्मद्वारं सर कुमार्गं जहि षाट्कोशिकं शरीरं त्यज शुद्धोसि बुद्धोसि विमलोसि क्षमस्व स्वपदमास्वादय आस्वादय स्वाहा ॥ इति ब्राह्मीविद्योपनिषत् ॥

# براھمی وِدھیا

اُوم اُوم اُوم - تِرگونہ ، پوُرشہ ، کھیترچہ - موہم ، بھندی
رجس تمسی ، بھندی - پراکرتہ ، پاشہ جالم ، ساورنم ، پری ہر ، ستوم
گرہانہ ، پرشوتموسی ، سومہ سوُریانلہ پرور پرمہ دھامن ، برھمہ ،
وِشنو ، مہیشور ، سورُوپہ ، سرشٹی ستھتی ، سمہار ، کارکہ ، بھرُومدھیہ
نلیہ ، تیجوسی ، دھاماسی ، امرتاتمن اوم ، تت ست ہنساشوُچی
شت ، وسوُرنتہ رِکھ ست ، ہوتا ویدی شت ، اِتھتی ، دورُونہ
ست - نرشت ، ورست رِتہ ست ، ویومہ ست ، ابجا ، گوجا ، رِتہ جا ،
ادرجا ، رِتم ، پرم ، برھمہ سورُوپہ ، سروگتہ ، سروشکھتی ، سرویشور ،
سروِیندریہ گرنھتی بھیدم ، کورُوکورُو ، پرمم پدم ، پرامرشیہ پرمارگم ،
برھمہ دوارم ، سر ، کوُمارگم ، جھی ، شٹ کوشِکم شریر رم ، تیجہ ، شودھوبکی ،
بدُھوسی ، وِملوسی ، کِھمسوسوپدم ، آسوادیہ ، آسوادیہ ، سواہا -

ماتنگہ، چرمامبھر، بھُوشنائی، سمتہ، گِروانہ، گنارِچتائی۔ ترئیے، لوکیہ ناتھائی، پُورانشکائی، تسمیئے مکارائی نماہ شوائی (۲) شِواموُکھامبھوجہ، وکاسنائی، دکھیسی، یگییہ سی، وِناشکائی۔ چندرارکہ، وَیشانر، لوچنائی، تسمیئے شِکارائی نماہ شِوائے۔

(۳) وشِشٹھ کومبھوت بھوگوتمادِ، مُونیندر، وندیائی، گریشورائی۔ شری نیلہ کنٹھائی، ورشہ دوجائے، تسمیئے وکارائی نماہ شِوائے (۴) یگییہ سوُروپائی، جٹادھرائی، پِناکہ ہستائی، سناتنائے۔ نِیتائی، شوُدھائی، نِرنجنائے، تسمیئے یکارائی نماہ شِوائے۔

اُومکارم، بِندُوسمیُوکتم، نِیتم، دھیاینتی، یوگِناہ۔ کامدم، موکھیدم، چیواُومکارم، تم نماحہم (۱) نہ جاتو، نہ مرتو، یشچہ، کھیو، یسے نہ وِدیتے، نمنتے دیوتاہ، سروے نکارم تم نمامی ہم۔ (۲) مہادیوم، مہاوکترم، مہا دھیانہ پرائنم۔مہاپاپہ ہرم، دیوم، مکارم تم نمامی ہم۔ (۳) شواُت پرتردناستی، شِوشاسترےشِونِشچیاہ۔شِمنتی، سروپاپانی شِکارم تم نمامی ہم (۴) واہنم ورشبھو، یسے، واسُوکی، کنٹھ بھُوشنم۔ وامے شکھتی دھرم دیوم، وکارم تم نمامی ہم۔یتر تتر ستھتی دیواہ سروویاپی مہیشوراہ۔ یوگوُرو سرودیوانام، یکارم تم نمامی ہم۔

بھیرو ستوتی :- اِتہ ، بھی شنہ ، کٹوٹ بھاشنہ ، یمہ کِنکر ، پٹلی ۔
کرتہ ، تاڈنہ ، پری پی ڈنہ ، مرنا گمہ ، سمیئے ۔ اُومیا ، سہہ ، ممہ ، چے تسی
یمہ ، شاسنہ ، نِوسن ۔ شِو ، شنکر ، ہرے ہر دُورِتم ۔ (۱) اتی دُورنیہ ، چھوڑ
لیندرر ، رِپُو ، سنچیہ ، دلتے ۔ پہ وِ ، کرکشہ ، کٹو ، جل پتہ ، کھلہ ، گرہنہ
چلتے ۔ شِویا ، سہہ ، ممہ چے تسی ، شِششہ شیکھر ، نِوسن ، شِوشنکر (مذکورہ)
(۲) بھو بھنجنہ سُور ، رنجنہ ، کھلہ ونجنہ ، پُورہن ۔ دِنُو جا نتکہ ، مدنا نتکہ ،
بھگون ۔ گِرجا ور ، کرو ناکر ، پرمیشور ، بھیہ ہن ، شِوشنکر (مذکورہ)
شنکر شاسنہ ، کرتہ شاسنہ ، چتُراشرمہ ، وِشیے ۔ کلہ وِگرہ ، بھو دُور ،
ہ ، رِپُو دور بلہ سمیئے ۔ دِوجہ ، کھیتریہ ، ونیتا ، شِششُو ، در ، کمپتہ ، ہردیے
شِوشنکر (مذکورہ)
(۴) بھو ، سمبھو ، وِودھا میہ ، پرِپیڑتہ ، وِپُوشم ۔ دِیتا تجہ ، ممتا بھر ، کلوشی
کرتہ ہردیم ۔ کُورو مام بنجہ چرنارچنہ ، نِرتم ، بھو ، ستہ تم ، شِوشنکر ، شِوشنکر
ہرے ہر دُورتم ۔

پنچہ اکھر شٹھ اکھر ۔ شِو ستوتی ۔ ناگیندر ہارائے ، ترِلوچنائی ، بھسما نگہ
راگائی ، مہیے شورائی ۔ دیوادھی دیوائی ، دِگمبھرائی ، تسمیئے ، نکارائی ،
نماہ شِوائی ۔ (۱)

